॥ स्वरूपानुसन्धानाष्टकम् विज्ञाननौका च ॥

तपोयज्ञदानादिभिः शुद्धबुद्धि-
विरक्तो नृपादेः पदे तुच्छबुद्ध्या ।
परित्यज्य सर्वं यदाप्नोति तत्त्वं
परं ब्रह्म नित्यं तदेवाहमस्मि ॥ १॥

दयालुं गुरुं ब्रह्मनिष्ठं प्रशान्तं
समाराध्य मत्या विचार्य स्वरूपम् ।
यदाप्नोति तत्त्वं निदिध्यास विद्वान्-
परं ब्रह्म नित्यं तदेवाहमस्मि ॥ २॥

यदानन्दरूपं प्रकाशस्वरूपं
निरस्तप्रपञ्चं परिच्छेदहीनम् ।
अहम्ब्रह्मवृत्त्यैकगम्यं तुरीयं
परं ब्रह्म नित्यं तदेवाहमस्मि ॥ ३॥

यदज्ञानतो भाति विश्वं समस्तं
विनष्टं च सद्यो यदात्मप्रबोधे ।
मनोवागतीतं विशुद्धं विमुक्तं
परं ब्रह्म नित्यं तदेवाहमस्मि ॥ ४॥

निषेधे कृते नेति नेतीति वाक्यैः
समाधिस्थितानां यदाभाति पूर्णम् ।
अवस्थात्रयातीतमद्वैतमेकं
परं ब्रह्म नित्यं तदेवाहमस्मि ॥ ५॥

यदानन्दलेशैः समानन्दि विश्वं
यदाभाति सत्त्वे तदाभाति सर्वम् ।
यदालोकने रूपमन्यत्समस्तं
परं ब्रह्म नित्यं तदेवाहमस्मि ॥ ६॥

अनन्तं विभुं निर्विकल्पं निरीहं
शिवं सङ्गहीनं यदोङ्कारगम्यम् ।
निराकारमत्युज्ज्वलं मृत्युहीनं
परं ब्रह्म नित्यं तदेवाहमस्मि ॥ ७॥

यदानन्द सिन्धौ निमग्नः पुमान्स्या-

दविद्याविलासः समस्तप्रपञ्चः ।
तदा नः स्फुरत्यद्भुतं यन्निमित्तं
परं ब्रह्म नित्यं तदेवाहमस्मि ॥ ८॥

स्वरूपानुसन्धानरूपां स्तुतिं यः
पठेदादराद्भक्तिभावो मनुष्यः ।
श्रुणोतीह वा नित्यमुद्युक्तचित्तो
भवेद्विष्णुरत्रैव वेदप्रमाणात् ॥ ९॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छङ्करभगवतः कृतौ
स्वरूपानुसन्धानाष्टकम् सम्पूर्णम् ॥